# पदकारिकारत्नमाला

श्रीशङ्कराचार्यविरचिता श्रीकान्तं

सितरुचिराजितोत्तमाङ्गं गौरीशं गुरुपदम-म्बुजालयं च ।

सन्नत्वा सुललितलक्षणं पदानामाचार्यैः प्रकटितमेव

वाचयामः

पदानामावलिं वेल विसर्गाणां निरीक्षणम्

नान्तानां वक्ष्यते लक्ष्मनिक्षिप्यैकाक्षरे क्षयम्

विहीना ॠ ॡ वर्णाभ्यां न वा यः स्वराः

दशमं निन्दुना ज्ञेयं विसर्गाद्विंशतिर्भवेत्

त्रिदशाङ्को कुङ्कुशः पार्श्वा उकारश्चोभयाङ्कुछाः

आसन्नस्त्रिदशं लक्ष्म यत्र क्वचिदिह स्फुटम्

पदानां लक्षणं प्रोक्तं वेलानां तदनन्तरम्

वार्गाणां पञ्चमार्वाणां पञ्चपञ्चोर्ध्वरेफया

दशोभयाङ्कुशं लक्ष्म वेदे वाजसनेयके

वार्गान्तशक्षरैः पञ्चविसर्गाणां निरीक्षणम्

अन्यो रेफस्तथा पञ्च द्विपञ्चेषु शुकस्तथा

सवेलसनिसर्गाङ्को वार्गाणां च हलं क्रमात्

सविसर्गास्तथाम्भस्था हकारेणाप्तलक्षणम्
अवेलास्तद्वद्दृष्ट्वाणो लस्तस्थैव हनं क्रमात्
नान्तानांनै त्वधोयुक्तं वर्गाणां च हलःक्रमात्
ऊष्माणं च तथान्तस्थरेफवर्जं यथाक्रमम्
पञ्चानां च द्विपक्षी च शुकी पारि श्वतीति यत्
गणान्तानां निजं पूर्णं सप्तानां पदलक्षणम्
सर्वशास्त्रविचारज्ञः सदाचार समागमः
तपस्समाधिनिरतो गुरुध्यानसमन्वितः
सर्ववेदार्थतत्वज्ञो भानुकोटिसमद्युतिः
सर्वागमविवेकज्ञः सर्वमन्त्राधिपः शुचिः
शङ्कराचार्यनामाहं रत्नमालाच वक्ष्यते
उमायुक्तो विश्वनाथश्चरणद्वयवन्दितः
ब्राह्माणं भास्करं व्यासं श्रीकान्तं च जठात्प्रभुम्
यजुर्वेदमहाकल्पतरोरेकशतैर्युताः
शाखारूतत्रशिरवाकाराः प्रथमा काण्वसंज्ञिका
पुण्यं पवित्रं पूतन्तु सर्वमन्त्रसमागमम्
यजुषां चैव सर्वेषां तन्ह्रेष्टसममुत्तमम्
पदानां कारिकां चैव रत्नमालां च सौद्वकाम्
--- यशाखासु यथोक्तं तु यथाकृतम्
तथा श्रुत्य नुसारेण वक्ष्ये हं रत्नमालिकाम्

पदानां चैव वेष्टानां विसर्गाणां तथैव च
यथाक्रमस्तु नान्तानां वक्ष्येऽहं गण्यते तथा
इषे त्वेति समन्त्रस्य पदास्त्रयोदशैव च
वेष्टनं चैकमेव स्याद्विसर्गास्तु त्रयो भवेत्
आप्यायध्वं चतुर्दभ्यां द्वौ वृत सप्तविसर्जनाः
ध्रुषा ह्यस्मिन्नेकादशीमेकवृत्रिर्विस्रुज्विनान्
दशदौरसि वृत्र्! यैकं विसर्गाश्चतुरो भवेत्
पञ्चदशी न्दुहस्व मवृत्रयो श्चतुरो विस्रुक्
देवस्त्वादशा वृट्ट्वौ च त्रि सर्गः परे क्रमात्
देवस्त्वादशा वृट्ट्वौ च त्रि सर्गः परे क्रमात्
देवस्त्वादशा वृट्ट्वौ च त्रि सर्गः परे क्रमात्
त्रयो दशैते साविश्वा वृच्चतस्रो विसृग्वयम्
पञ्चदशाग्ने व्रतपते वृतं चैक वेष्टनम्
कस्त्वा युनक्ति दशमीं विसर्गौ द्वौ पदे यथा
प्रत्युष्टं रक्षो द्वादश्यां चतस्रोऽष्टौ विसर्जनाः
सप्तपदास्तु देवानां सप्तवृत्रिर्विसर्जनाः
सप्तदश्यां तु विष्णुस्त्वा त्रयोवृत्पञ्चविस्रुताः
अग्नये जुष्टं द्वादश्यां वृदेकं चैकं विस्रुतम्
दृँ हन्ता वष्टृदुर्य्या प्योलशीं चैकं वृत्तिर्विसर्जनाः
पवित्रे स्थो द्वादशां च वृत्र्! यश्चतुरो विस्रुक्

देवीरापो द्वादशी स्यात्पञ्चवृच्चतुरो विस्रुक्
युष्मां इन्द्रो विंशतिस्तु त्रयोवृत्तिर्विसर्जनाः
दैव्याय कर्म द्वादश्यां प्राट्वयोश्च त्रयस्तथा
शर्मासीति त्रयोदश्यां द्वानयां पञ्च विस्रुक् ततः
एकादश्यामद्रि रसि प्राचैकं चतुरस्तथा
अग्ने स्तनुरस्यष्टौ स्याद्वेष्टनौ द्वौ त्रयो भवन्
चतुर्दशां बृहद् ग्रावा चतस्रश्चतुरैकनान्
कुककु सि दश द्वौ वृद् द्वौ विसर्गौ ततः परम्
वर्षवृद्धं दशम्यां तु चत्वारि वृत्रयो विस्रुक्
अपहतं चतुर्दश्यां वृट्वयं षष्ठमुच्यते
धृष्टि त्रयोदशां चैव त्रयो वृद्द्वौ निसर्जनौ
ध्रुवमसीति द्वादश्याँ त्रिषश्चैको विसर्जनः
अग्ने ब्रह्मन्नवपदा विश्वाभ्यस्त्वा चतुर्दशीम्
एकं पञ्च चधिषणाष्टादशौ द्वौ विसर्जनौ
धान्यमेकादशी द्वौ वृन्नान्तमेकं यथोदितम्
प्राणायन्त्वा चतुर्दश्यां वृत्त्रयस्तैकमेव च
वेदो सीतिचतुर्दश्यां विसर्गा --- मस्तथा
संवपामि नवदश द्वौ वच्च सप्त विस्रुताः
इदमग्नेश्च षोळश्यां ऊत्रयः षड्विसर्जनाः
षोळश्यग्निष्टेत्वचं तु वृद्द्वयं सप्तमा भवन्

मा भे पञ्चदशैकं वृट्विसर्गः पञ्चमस्तथा
पञ्चदशाददेध्वरश्चतुर्विंश्व विस्रुताः
पृथिव्यै वर्मदशसु षृदेकं चैकमेव च
चतुर्विंशो व्रजं गच्छ वृट्वौ षड्वेकनाद्भवेत्
अपारुरुं चतुर्दश्यां द्वौ प्राट्वौ विस्रुगोकनान्
यत्रेणत्वाष्टविंशो वेष्टनौ ट्वौ प्रकीर्तितौ
अष्टादंश पुरा कूरः पञ्चमं पञ्चनान् द्वयोः
अनिशितोसिषोळश्यां षड्वृच्चैकं च विस्रुतम्
पञ्च दशादित्यैरास्ना पृदेकं द्वयमुच्यते
अग्ने र्जुह्वाट्वादशाँ च त्रिवृत् षट् च विस्रुग्यथा
एकादश्यां तु तेजोसीत्येकं चैकमेव तत्
यस्ते प्राणो विंशतिस्तु पञ्चमं च त्रिनान् भवेत्
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्वमालायां
प्रथमोऽध्यायः समाप्तः

अथ द्वितीयोऽध्यायः
द्वाविंशतिस्तु कृष्णोसि वृट्वौ पञ्चविसर्जनाः
अदित्यै व्युद्धैकादश्यान्द्रि वेष्टश्च त्रयस्तथा
भूपतये तु त्रयोदश्यां त्रयो वृट्ट्वयमुच्यते

यजमानस्य सप्तदश्येकं वृत् सप्तविस्रुताः
वीतिहोत्रंत्वानवभिर्द्वयोर्वेष्टनयोस्तथा
समिदसीतिद द्वादश्यां वृत्तायश्च चतस्रकः
ऊर्णाम्रदस्यैकादश्यां द्वौ वृत् चत्वार एव च
घृताच्यस्यष्टा दशस्तु चैकं वृच्चैकमेव तु
चतुर्दशां ध्रुवा असदन् त्रिवृदेकं च नान्तकम्
पञ्चदश्यग्ने वा जजिश्चास्रं त्रिविसर्जनः
द्वादश्यास्कन्न मद्याज्यं तथैकं चैकतो भवेत्
वसुमतीं सप्तदशश्चैकं वृत् पञ्चमस्तथा
अग्ने वे रेकादश चाद्वा भ्यमृद्वमस्स्य च
स्विष्टकृद्देवोदभिरेक --- विसर्जनः
अत्र पितरे कादश्यां त्रिषु वृच्च द्वयं विस्रुक्
उप हूता चैकादश्या मेकं चैकं विसर्जनम्
एकादशोपहूतस्तु शृदेकं च त्रिषुक्रमात्
चतुर्विंशमयीदंतु षड् वृत् सप्तैकनान्तकम्
देव सवितरेतंत्वा द्वादश्येकं विसर्जनम्
मनोगायत्रमोदश्यां षड्वृत् चत्वार एव च
बृहस्पतिः पञ्चदशीं तथैकं वृत् च सप्तमम्
मित्रस्य त्वाचक्षुषा च सप्तभिस्तु पदैः पृथक्
आददे ग्ने षोडशी तु चैकं वृत् षड्विसर्जनम्

स्वाहाकृतं त्रयोदश्यामेकं वृत् द्वौ विसर्जनौ
इन्द्र स्य त्वां नैकं वृत् द्वौ विसर्गौ द्विनान्तकौ
प्राणापानौ मे विंशतिर्विसर्गाद्वयमेकनान्
एषा ते अग्ने समिन्तया षोडशैकँ वृट्टुच्यते
सप्तदशे तत्रे देववृदेक द्वौ विसर्जनौ
मनो ज्योतिर्विंशतिस्तु चात्वारि च विसर्जनाः
अग्नी षोमयोष्टाविंशत्त्यज्जतस्रश्च केषकनान्
वसुभ्यस्त्वाचैकादशीन् द्वौ वृत्रिषु विस्स्रुषु
व्यन्तु सप्तदशीं षड्भिर्विसर्जनायकैः
द्वादशभिश्चक्षुष्पा असिवृच्चतस्रः षळत्रतु
तन्तये तन्तुषोडश्यामेकं तिस्रो विसर्जनाः
सँ स्रवभागाष्टविंशषड्भोवृदष्टमैकनाम्
अष्टादशाग्ने दष्ट्यायोः पञ्चब्रुक् चतुरो विस्रुक्
पञ्चादशाग्नये संवे त्रयश्चैवैकविस्रुत
उत्पुरुषः पञ्चविंशस्तु षड्वाष्टौ चैकनान् भवेत्
देवागातुश्चतुर्दश्यामेकं चत्वारि विस्रुताः
वरहिनवदशस्त्रयस्सप्त च विस्रुताः
कस्त्वा विमुञ्चैकादश्यां न्दि्र भिर्विस्रुग्निरेव च
वेषो स्स्युपद्वादशी च द्विस्रुक् चत्वारिश्चकनान्
द्वादशीरुद्धाः कर्माण्याश्चतुरो वृत्रिभिर्द्वयोः

संवर्चसानवदशौ द्वौ वेष्टौ च्चतुस्रो विस्रुक्
तथा त्रयज्ञशं च पञ्चदश्येकवेष्टानम्
दिवि विष्णर्नवदशो द्विवृत् षट् चैकनान् भवेत्
अस्मादतां च नवभिस्तथा द्वौ वृद् द्वयो विस्रुक्
स्वयमम्रचतुर्दश्यां वृत्त्रयं षट् च विस्रुताः
द्वादश्याग्ने गृहपते पञ्च वृत्त्रिविसर्गकः
अस्तूरिणोः षोडशीतु द्वेवृत्त्रिः स्रुग्भ्य एव च
उरुविष्णो चतुर्दश्यां चतस्रश्चैकविस्रुकः
ततोऽसि पञ्चदश्यां तु वृदेकद्वौ त्रिनान्तकम्
चतुर्विंशतिरिदं मेकर्मं द्वयोस्त्रिभिर्विस्रुक्
दशाग्नये कव्यवाहश्चत्वारि तिसृभिस्ततः
ये रूपाणि सप्तदश्यां तिस्रः षट्चतथैककम्
त्रयोविंशतिर्नमोवो विसर्गैकादशैकनान्
उदायुंषादशद्वौ वृदेकोविसर्ग एकनान्
दशद्वौ धन्तपितरो वृदेकं च द्वयो विस्रुक्
ऊर्जं वहन्तीर्द्वा दश्यामेको वृत्त्रिभिरेकनान्
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां पदकारिका रत्नमालायां
द्वितीयोऽध्यायः समाप्तः

अथ तृतीयो ध्यायः

समिधाग्निं दशैकं वृदेकं विसर्गमेकना

सुसमिद्धाय शोचिषे पदास्सप्तशब्द द्व्वयोः

तन्त्वा समिद्भिर्नवभिर्वृदेकं द्वयमत्र तु

उपत्वाग्ने हविर्दशा चैकं वृत्त्रिषु विस्रुषु

भूर्भुवः स्वः सप्तदशी पञ्चवृत् षट् च विस्रुताः

आयंगौर्द्वादशी द्वौ वृत् चत्वार्येकं च नान्तकम्

दशभिरन्तश्चरति द्वयोर्वृद्द्वयमन्द्र तु

त्रिंशद्धामैकादश तु वृदेकं तु द्वयोः पुनः

चतुर्दशाग्नि ज्योतिषं च वृत् षट् त्वमेवच

सूर्यज्योतिश्चतुर्दश्यां पञ्च वृत् षट् च मुच्यते

सजूर्देवेन दशतु तिस्रश्चत्वार एव च

तथा दश सजूर्देवस्त्रिश्चतस्रो यथोदितम्

इह पुष्टिं सप्तदश्यां तथाष्टौ वृद्द्वयं तथा

अनमित्रं मे अधराक्त्रयोदश्येक विस्रुतः

इन्द्र ः! पश्चात्पञ्चदशां विसर्गाः पञ्चचैकनान्

दशभिः समिदस्स्योति त्रयाणां वृतमेककम्

उपप्रयन्तो ननभिर्द्वयोर्वृत्तोश्च चैककम्

अग्निर्मूर्धा च दशभिश्चतुर्भिस्तु विसर्जनैः

उभावां सप्तदश्यां तु द्वयोर्वृच्चैकविस्रुकः

अयं ते योनिः षोळश्यां विसर्गैः षड्भिरेकनम्
सप्तदश्यामयमिह चत्वारि वृच्च सप्तभिः
अस्य प्रत्ना च दशभिरेकं वृद्धौ विसर्जने
तनूपाग्ने ष्टादशस्त्रिवृत्सप्त च विसृुगाः
षोळश्यग्नेये न्मेतन्वा चैकं वृत्तिभिरेव च
वयस्वन्तौ वयश्चाष्टौ त्रिभिः पञ्चविसृुक् तथा
चित्रावसो त्रयोदश्यामेकं वृच्चैकविसृुताः
संप्रियेण नवदशश्चैकं वृत्सप्तमो भवेत्
नवदशोर्जस्थोर्जं वश्चैकं सप्त तथैकनम्
इहैव स्ते पञ्चदशी द्वयोर्वृच्चैकमव्यथा
उपत्वाग्ने च्चैकादश्यां द्वयोस्त्तिसृषु चक्रमात्
राजन्तमध्वराणां च तथाष्टौ च पदाः कृताः
सनः पिते व दश द्वाभ्यां चत्वारि विसृुताः
अग्ने त्वं नःसप्तदश्यां द्वाभ्यां चाष्टभिरत्र तु
तन्त्वाशोचिः सप्तदशी त्रयञ्च षट्च विसृुताः
इळये ह्येकादश तु तथैकविसृुगाः
सोमानं स्वरणोष्टभ्यस्त्रयश्चैव विसर्जनाः
योरेवान्यश्चैकादश्यां चत्वारि सप्त चैकनान्
एकादश्याममानश्शाँ सः षड्भिर्विसर्जनीमकैः
महित्रीणां च नवभिरेकं वृत्त्रयं ततः

नहि तेषां मा दशद्वौ वृद् द्वौ योरथन्तरम्
ते हि पुत्रा सो दशभिस्त्रयश्चैव विसर्जनाः
कदाचनो नवदशो द्वाभ्यां द्वावेकमिष्यते
तत्सवितुर्दशैवस्यादेकं वृत्पञ्च विसृगाः
परिते ष्टादशास्त्रिभ्यः षड्विसर्गास्तु चैकनान्
भूर्भुवः स्वस्तु दशभिः पञ्चवृच्चाष्ट दृश्यते
नर्यप्रजां त्रयो दश्यं त्रयो वेष्टैक नान्तकम्
अग्ने सम्राट् चतुर्दश्यां पञ्चभिः पञ्चचैककम्
सप्तदश्यग्ने गृहपतैकं वृच्चत्त्रिभिस्ततः
ऊर्जं विभ्रद्वः षोळश्यां चत्वारिषट्सु च द्वयोः
ग्रहानुपद्वादशां तु द्वाभ्यां षड्भिस्तु चैककम्
पञ्चदशाभोन्नस्य चतुरः षट् तथैव च
प्रघासिन सप्तभिस्तु द्वाभ्यां चतुर्भिर्विसृतैः
यद्ग्रामे यत्त्रयोदश्यां विसर्गश्चैकमुच्यते
द्वाविंशतिर्मोषूणस्तु त्रयोष्टावेकमुच्यते
अकन् कर्म त्रयोदश्यां त्रिभ्यश्चत्वारिचैककम्
अवभृथा सप्तदश्यां सप्तवृत् षड्भिरेव च
पूर्णा दर्वी चतुर्दश्यां तिस्रश्चैकं प्रपद्यते
देहि मे नवदशभिर्द्वयोर्वेष्टनयोरथ
षोळश्यन्नमीमदद्वाभ्यां चत्वारि चैककम्

सुसन्दृशं सप्तदशी चत्वारि द्वौ द्वयोस्तथा
मनोन्वा हुवा नव च वृच्चैकं द्वौ च विस्रुतौ
आनये तु द्वादशै तुं तथैकं त्रिभिर्विस्रुतैः
दशपुनर्नः पितरो विसर्गाः षट् ततः परम्
वर्यसोमवृते तवनव चैकं वृत्त्रिषु विस्रुषु
सप्तदश्ये षते रुद्र षड्विसर्गसमन्वितम्
सप्तदश्यवरुद्रं च द्वाभ्यां द्वाभ्यां च पञ्चमः
दशभिर्भेषजमसि वेष्टनश्चैकतो भवेत्
त्रियम्बकं चैक चतस्रो द्वौ चविस्रुगौ
एतेन रुद्र षोळश्यां चत्वारि सप्तचैकता
वाजिनां वा नव दशो द्वाभ्यां वृत् पञ्चचैकता
वा ज्यहं वाजिनवभिर्द्वयं वेष्टैतमेव च
नवः सवित्रा प्रसूतानेष्टनौ द्वौ त्रयस्ततः
कश्यपस्येत्येकादश्यां पञ्चभिश्चैकमेव च
एनधा ता त्रयोदश्यां विसर्गं चैकमुच्यते
दीर्घायुत्वायदशभिस्त्रिश्यो वृद् द्वौ विसर्जनौ
इति शङ्कराचर्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

सप्तदश्येदमगन्म चत्वारि षट् च विस्रुताः
इमा आपैकविंशः स्यात्तिसृष्वष्टौ तथैककम्
विश्वँ हि चतुर्विंशतिश्चैकं षड्भिस्तु चैकना
महीनां पयःपषोळश्यां द्वाभ्यां सप्त च विस्रुताः
द्वाविंशति चित्पतिर्माषड्भ्यां पञ्चभ्य आहरेत्
त्रयो दश्या वो देवा सो द्वौ षड्हिः सर्व एव तु
स्वाहा यज्ञं मनसश्च नवपदा द्वौ विस्रुगौ
त्रयो विंशत्या कूत्यै तु चत्वारि वृच्चतस्रुकः
विश्वो देव त्रयोदश्यां विसर्गाश्चतुरस्तथा
ऋक्सामयोश्चतुर्दश्यां पञ्चभ्यो विसृतास्त्रयः
शर्मासि शर्माष्टदशश्चैकं वृत्रिश्च एव च
सोमस्य नीविश्चतुर्दश्या त्रैकं पञ्चमी तथा
उच्छ्र्यस्व चैकादश्यां एकं तिस्रो विसर्जनाः
दशभ्यो नृतं कृणुतौ पञ्चभिश्च विसर्गकैः
दैवीज्यमेकादश्यां चतस्रस्तु द्वयं विसृक्
ये देवाश्च त्रयोदश्यां त्रयो वृन्नव विस्रुगाः
श्वात्राः पीताष्टादशो द्वयोर्वृद् द्वादशीँ विसृक्
इयन्ते चैव षोळश्यां त्रिभ्यः पञ्चभ्य एव च
चतुर्दश्यग्ने त्वं सृजा त्रयश्च त्रिभिरेककम्
पुनर्न नो नवविंश पञ्चभिः पञ्चदश्य च

त्वमग्ने व्रतैकादश्यां तथैकं वृत्रिभिः पृथक्
रास्वेयच्च त्रयोदश्यां चत्वारि च विसर्जनाः
सप्तदश्येषा ते शुक्रो विसर्गैस्त्रिभिरूहतु
तस्यास्ते सत्त्रयोदश्यां त्रयो वृच्च द्वयोर्यरि
चिदसि मनासीस्त्रयोदश्यां त्रयश्चत्वारि विस्रुताः
मित्रस्त्वापद्यष्टादशस्त्रिभ्यश्चत्वारि सर्वदा
सादेवि देवं षोळश्यां तकद्वयमुच्यते
वख्यश्मि चतुर्दश्या थचैकेन च त्रिषुक्रमात्
द्वादश्यदित्यास्त्वामूर्ध्नन्द्वौ त्रयस्येमस्य तु
अस्मे रमस्वा नवभिस्चत्वारि च त्रयस्तथा
मा वयमष्टाविंदत्या त्रयः पञ्चभ्य एककम्
सप्तदश्येण ते गायत्रा त्रयं षड्भिर्यथाक्रमम्
नव चास्माकोसिशुकश्चैकं चत्वारि विस्रुगाः
चतुर्विंशतिरभित्यं षड्भिः सप्तभ्य एव च
पजाभ्यस्त्वा प्रजास्त्वष्टौ पञ्चभिस्त्रितयं ततः
चन्द्र त्वा चतुर्दश्यामेकं वृदेकविस्रगः
तपसस्तनूर्दशे तु द्वौ वृतौ चाचतुर्षुक्रमात्
मित्रो नश्चतुर्दश्या थचैक द्वारिचैकनः
स्वानं भ्राज पञ्चदशीं त्रयस्त्रिभ्यो द्वयं ततः
परिमाग्ने षोळशीच त्रयश्चैकं तथैकन

प्रतिपन्था द्वादशी तु तथैको द्वितयं भवेत्
चतुर्विंशत्यदित्यास्त्वक् तत्रैकश्चतुरस्तथा
वनेषु व्यन्तोष्टादश स्तद्द्वौ ज्या द्वममिष्यते
सूर्यस्य चक्षुर्द्वादश्यामेकोवा षड्विसर्जनाः
उस्रावेतं द्वादशी तु चत्वार्येकैकमारभेत्
भद्रो मे सप्तविंशत्या त्रिभ्यः सप्तद्वयं ततः
नमो मित्रस्य षोळश्या द्वयोर्वृच्च त्रयं ततः
वरुणस्योत्तम्भदश च चत्वारीत्येकविस्रगः
याते धामानवदश पञ्चचत्वारि चैककम्
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः
अग्नेस्तनू चतुर्दश्यां द्वाभ्यां त्रिभ्यस्तथैव च
अष्टादशाग्ने जनित्रमेकं चत्वारि विस्रुताः
भवतं नः पञ्चदश्यां चत्वारि त्रयमेव च
अष्टादशोग्नावग्निश्च चत्वारि सप्तचैकता
आयतये त्वाथाष्टौ च त्रिभ्यां वृच्चैकनान्तकम्
अनाधृष्टमस्यष्टभ्यस्त्रिभ्यश्चद्वौ प्रतीयते

एकादश्यां च स्म सत्यं त्रिभ्यो वृत्रययीर्यताः
या तव चतुर्विंशत्या तिसृषड्भ्यो ह्यनन्तरम्
अँ शुरँ शुरष्टे षोळश्यां द्वाभ्यां चैव तथा त्रयः
आप्याय त्रयो दश्यामेकोवृन्नान्तयो द्वयोः
एकादशौष्टारायाश्च द्वाभ्यां चैव तु पञ्चभिः
याते अग्ने ष्टादशभिश्चत्वारि पञ्चभिः पुनः
तप्तायनी मे द्वादश्यां वेष्टनौ द्वौ यथाविधि
पञ्चविंशद्विदेरग्ने द्वाभ्यां वृत् षड्विसर्जनाः
इन्द्र घोषः पञ्चदशीं षट्कं तु दशभिर्विस्रुक्
द्वादशीदमहं तप्तं द्वयोश्चैव चतस्रुकः
एकादशीं ब्रह्मवनिश्चत्वारि पञ्चचैकता
ध्रुवासि पञ्चदश्याथ द्वयोर्वृच्चत्रयं विस्रुक्
युञ्जते नव दशभिस्तसृभिश्च तथा दश
इदं विष्णुर्द्वादशी च चैकं वृद्धेकमेव च
इरा वती सप्तदश्या षड्भ्यो वृत्रय ईरिताः
देवश्रुतौ चतुर्दश्यां त्रिभ्यो वेष्टभ्य एव च
अष्टादशस्तु स्वं गोष्ठं चतस्रश्चतुरैकता
विष्णोर्नुकं नवदशाः पञ्चमिः पञ्चमो विस्रुक्
दिवो वा पञ्चविंशत्या द्वयोरत्र चतस्रकः
सप्तदशः प्रतद्विष्णुस्त्रिभिवृत्पञ्चविस्रुगाः

विष्णोररराटैकादश्यामेकं वृच्चतुरो विस्रुक्
आददे नारित्रिंशत्या तिस्रश्चत्वार्यवैकता
इदमह्नंतं वलगामेकविंशश्चतुर्नवा
स्वराळसिनवम्यां तु चाष्टावृच्चैकविस्रुतम्
रक्षोहणोदशट्तौ वृत्रिभिरत्र द्वयं ततः
रक्षोहणो द्वादशीं तु चत्वारि वृद्व्वयोर्विस्रुक्
यवोस्यैकादशी चैव विसर्गास्त्रय एव च
शुन्यन्तां च त्रयोदश्या द्वौ वृच्च द्वयमेव च
त्रयो दशीन्द्युता नस्त्वा तिसृभिश्च द्वयं विस्रुक्
ब्रह्मद्द्दर्क्षहैक विंशत्या चत्वारि चतुष्टैकता
परित्वा च त्रयोदश्यामेकं वृत्सप्तविस्रुताः
इन्द्र स्यू ध्रुवं षट्च तथैकं वृट्ट्वयं ततः
विभूरसी नवं चैव पञ्चम्यो ष्टभ्य एव च
उशिक् विरथाष्टम्यां षड्विसर्गाश्च चैकन
ऋतधामेतिचाष्ठौ च चत्वारि वृच्चसप्तमः
सम्राट् कृशानुरष्टभ्यश्चतुरो वृच्च षष्ठके
समूह्योऽसि चतुर्विंशश्चतस्रश्च नवाविस्रुक्
ज्योतिरस्येकविंशत्या पञ्चभिः सप्तभिः पुनः
अग्ने नयस्सप्तदशी द्वयोर्द्वाभ्यां द्वयं ततः
अयं नो नवदशभिः द्वाभ्यां षड्भ्यस्त्रिभिः पुनः

देवसविताष्टादशं पञ्चविस्रुक् द्वयोश्चनान्
पञ्चदश्येदमहं च त्रिभ्यो वृच्चतुरेकता
या तवतन्वष्टाविंशश्चत्वारि षट् च विस्रुताः
अत्यन्यां अगां द्वादशीं विसर्गास्त्रिर्द्विनान्तकम्
तन्त्वा जुषा द्वादश वसुद्वयोर्वृच्चैकमेव च
पञ्चदश्यो षधेत्राय त्रकं वृत्रायं ततः
नवं दशभिरयं हि चतुरो वृच्च पञ्चमः
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
पञ्चमोऽध्यायः समाप्तः

अथ षष्ठोऽध्यायः

अग्रणीः सप्तविंशत्या चतस्रो वृच्चाष्टभीः
या ते धामा नवदशो द्वाभ्यां चत्वारि विस्रुताः
विष्णोः कर्माणि नवभिर्विसर्गाश्च त्रयस्तथा
दश तद्विष्णोः परं द्वौ वृत्रिभिर्विसर्जनैः
परिवीरसि द्वा द्वाविंशश्चैकं वृच्चदशाविस्रुक्
उपावीस्सप्तदशभिर्द्वाभ्यां षड्भिर्द्वयोस्ततः
रेवती स्त्रयो दशभिरेकं वृत्रिभिरत्र च
अग्नीषोमाभ्यां नवभिस्तथैकं वृद्द्वयोर्यदि

अपां पेरुश्च दशमस्तथैकं वृच्चतस्रकः
सन्ते प्राणश्चैकादश्यां चैकं वृच्च त्रयं ततः
घृतेनाक्तौ पशुदशचैकं विसर्जनीयकम्
उरोरन्तस्त्रयोदश्यामेकं वृत्रिर्विस्रुग्भवेत्
वर्षो वर्षी चतुर्दश्यां द्वयोः षड्भिर्विसर्जनैः
नमस्त आता द्द्वादश्यां वृदेकं तु त्रयस्तथा
देवीरापः शुद्धा दश त्रयो वृच्चषट्कमन्यथा
वाचन्ते द्वादशी तत्र विसर्गोस्य्येकमेकनान्
मनस्त आप्या द्वाविंशो द्वयोः षट्सु विस्रुग्यथा
वाचन्ते द्वादशी तत्र विसर्गो ह्येकमेकनान्
ॐषधे त्रायैकदश्यां द्वयोश्चतुर्थमेव च
दशेदमहरक्षोभिर्विसर्गौ द्वौ प्रकीर्तितौ
घृतेन द्यावाषोळश्यां चत्वारि वृत्त्रयं ततः
सन्ते मनस्सप्तदशी चत्वारि विस्रुगेकनान्
वातसत्वाद्ध्रा ज्यैन नव चैकं वृच्च त्रयं ततः
घृतं घृतपादशव्या द्वयोर्वृच्च त्रयं क्रमात्
दिशः प्रदिशः षोळश्यां नव चैकादशाविस्रुक्
देवत्वष्टर्नवदशश्चत्वारि त्रितयं विस्रुक्
समुद्रं गच्छ विंशत्यां ततो द्वाभ्यां द्वितीयकम्
दिवन्ते धूमैकादश्यां विसर्गस्ततथा द्वयोः

द्वाविंशतिर्मापोमौषधीश्चैकमेकादशैकनान्
सुमित्रियानः पञ्चदश्यां द्वाभ्यां वृदष्टमैकता
इदमापोष्टादशभ्यः कुर्याद्द्वाभ्यां द्वयोश्च तत्
हविष्मतीश्च द्वादश्यां विसर्गाः षट्त्रयश्चनान्
अग्नेर्वोपं त्रयोदश्यां त्रिभ्यो वृत् षड्भ्य एव च
अमूर्या उपद्वादश्या षड्भिर्विस्रुग्भिरेव च
हृदेत्वामनैकादश्यां द्वयोरत्र विसर्गयोः
सोमराजं दशभ्यस्तु चत्वारि चतुरैकता
शृणो त्वग्नेकविंशत्या चैकवृत्सप्तमेऽपि वा
देवीरापो दश द्वौ वृत् सप्तम्यां च तथा---
तं देवेभ्यो नवम्यां च द्वयोश्चैव त्रिभिर्यथा
कारिषिस्तु चतुर्दश्यामेको वा पञ्चमो विस्रुक्
त्रयोदशीं यमग्ने पृत्स्वैकं वृत्पञ्चसुक्रग---
आद--वासिविंशत्या पञ्चसु द्वयमुच्यते
मनोमेषोळशैकं वृत्त्रिभिर्विस्रुक् त्रिभिश्चनान्
दशेन्द्रा यत्वा वसुमषट्सुवृच्च परावत्
यत्ते सोम सप्तदशीं विसर्गस्तु द्वयं ततः
भ्वात्रास्थ पञ्चदश्यौ वा चत्वार्यष्टभ्य एव च
भ्वात्रास्थ पञ्चदश्यौ वा चत्वार्यष्टभ्य एव च
माभेर्यासं सप्तदशीं त्रिभ्यश्चतुर्भ्य एव च

प्रागपात्पञ्चदश्यां तु विसर्गाश्चतुरो भवेत्
त्वमङ्ग सप्तदश्यां तु चैकं चत्वारि चैकता
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां पदकारिका रत्नमालायां
षष्ठोऽध्यायः समाप्तः

अथ सप्तमोऽध्यायः

षोळशीं वाचस्पतये त्रयो वृन्नवविस्रुताः
द्वाविंशतिर्यत्ते सोम तथैकं पञ्चमोऽभवत्
षड्विंशतिर्मनस्त्वाष्टुपञ्चमः पञ्चमः क्रमात्
द्वादश्युपयाम गृहीद्वाभ्यां चत्वारि चैकता
अन्तस्तेऽष्टादशो यस्तु षड्भ्यः सप्तैकमुच्यते
आवायो चैकविंशत्या षड्भ्यश्चत्वारि एव च
नवदशश्चैन्द्र वायू चत्वारि सप्तमो भवेत्
अयं वां च त्रयोदश्यामे को वा द्वयमाचके
रायावयैकविंशत्या तिस्रः षड्भिर्यथाक्रमम्
यावाङ्कशातु षोळश्यां त्रिश्च द्वयमस्य च
तं प्रत्नथा नवदश सप्तवृच्चैकविस्रुतः
एष ते च त्रयाश्विस्त्रिंशदष्टौ त्रयोदशीं द्वयोः
अच्छिन्नस्याष्टादशो वा द्वाभ्यामष्टसु विस्रुताः

सप्रथमोष्टादशभिर्द्वाभ्यां पञ्चम एकता
अयं वेनोष्टादशश्च पञ्चवेष्टाश्च सप्तभिः
मनो न सप्तदश्याथ द्वाभ्यां षड्भिश्च दाशुषे
एष ते त्रयस्त्रिंशश्च दशपञ्च दशैकता
ये देवासोऽष्टादशश्च तथैकं त्रयमाविश
आग्रयणो सीसप्तभिर्द्वयोर्वृच्च द्वयोर्विस्रुक्
विष्णुस्त्वां च चतुर्दश्यां विसर्गा त्रयो भवन्
द्वाविंशत्यस्मे ब्रह्मणे तिस्रोष्टभिश्च पातवे
विंशेन्द्रा य त्वाबृहद्द्वाभ्यां चत्वारिदेवयुक्
देवेभ्यस्त्वा ष्टादशोवा पञ्चवृच्चैकविस्रुतम्
मूर्धानन्दिवोष्टादशश्चैको वा त्रय एकता
ध्रुवोसि द्वादशीं यस्तु त्रयः षड्भ्यस्तथाविस्रुक्
ध्रुवं ध्रुवे पञ्चदशीमेकं वृत्पञ्चविस्रुताः
यस्ते द्र प्सः पञ्चविंशश्चत्वार्यष्टष्विरानुषक्
मधवे माधवायेति चतुर्दश्येकमेकमेत्
इन्द्रा ग्न्यष्टा दशश्चैव चत्वारि पञ्चभिर्विस्रुक्
आघायेग्निं नवदशश्चतुर्भिर्विस्रुतः क्रमात्
नवमो मासश्चर्षणी चैकं वृत्पञ्च विस्रुताः
विश्वे देवास आगत त्रयोदशी द्वयं विस्रुक्
सप्तविंशेन्द्र मरुत्वस्ततो द्वाभ्यां षळैकता

मरुत्वन्तं पञ्चदशीं चतुर्भिश्चैकमेभ्यते
मरुतामोजसे त्वेति पदाश्चैते त्रयस्ततः
सजोषाश्च नवदशः चत्वारि षड्द्वयोरथ
महां इन्द्र श्चतुर्विंशो नवद्वादशैककम्
महां इन्द्रो यो नवभिर्द्वाभ्यां चत्वारि च द्वयोः
इति श्रीशङ्कराचार्यकृतौ वाजसनेय संहितायां
पदकारिकारत्नमालायां
सप्तमोऽध्यायः समाप्तः

अथाष्टामोऽध्यायः
आदित्येभ्यश्चैकविंशो द्वयोर्वृच्च द्वयं ततः
यज्ञो देवाः सप्तविंशस्त्रिभ्यो नव तथा द्वयौ
शृतस्मै नरो विंशत्या द्वाभ्यां पञ्चैक नान्तकम्
वाममद्यन्तवदशस्त्रिभ्यः पञ्चसु विस्रुषु
सावित्रोसित्रयोदश्यां द्वयं वा चतुरस्तथा
सुशर्मासीति पञ्चभ्यस्त्रयो वेळाद्वये विस्रुक्
बृहस्पति सुतानवश्चत्वारि द्वयमेकता
अहं परस्ता विंशतिरेकं वेळैकमुच्यते
अग्ने वाक्पत्निन श्चैकं वृद्विस्रुगेकता
प्रजापतिस्त्रयोदश्यां पञ्चवृन्नवविस्रुताः

हरिरसिहारी दशत्रिभ्यः पञ्चभ्य एव च
यस्ते देवषोळशीश्च सप्तवृत्सप्तविस्रुताः
युक्ष्वा हि केशि द्वाविंश चत्वारि वृच्चतस्रः
आतिष्ठपञ्चदशस्तु द्वाभ्यामेकैकमिष्यते
इन्द्र मिट्दरी द्वादश्यां द्वौ ळौ च द्वयोर्विस्रुक्
यस्मान्नजातोऽष्टादशश्चत्वारि सप्तमोविस्रुक्
पञ्चविंशेन्द्र श्च सम्राळेकं चत्वारि विस्रुताः
अग्न आयूंष्येकत्रिंशस्त्रिर्विसर्गस्त्रिनान्तकम्
अग्ने पचस्वा दश तु वेळोस्तिस्रो द्वयं विस्रुक्
उत्तिष्ठन्नवविंशत्या त्रयश्च त्रिश्चतस्रकः
नवविंशाद्द्वश्रमस्याविस्रुक् षड्भ्यश्चतुर्षुनान्
दशोद्वुत्यं जातवेदसं द्वयोश्चैकमेव च
चित्रन्देवानाष्टादशस्तथैकं वृच्च षष्ठके
विन इन्द्र त्रन्योनिं शत्त्रिभ्यः सप्तभिरेकता
वाचस्पतिं पञ्चविंश षट्वृत्वेळाश्च सप्तमः
विश्वकर्मान् सप्तदशीं चत्वारि चतुरैकता
सप्तदश्यां विश्वकर्मन् द्वाभ्यां पञ्चै -- मुच्यते
अग्नये त्वा द्वादशीं च पञ्चवृत्त्रितयं ततः
प्रेशीनां त्वा सप्तदश्यामेकमेक तथैकता
ककुहं पञ्चविंशत्या द्वाभ्यां षण्णां तु विस्रुताः

उशिक्त्वमेकविंशत्या चैकं वृत्त्रिषु विस्रुषु विक्रमात्
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
अष्टमोऽध्यायः

अथ नवमोऽध्यायः
प्राणायमेवर्चोदाष्टौ तिस्रो वृच्च द्वयोर्विस्रुक्
क्रतुदक्षाभ्यां ने सप्त द्वाभ्यां वृद्ध्वौ विसर्जनौ
आत्मने मे नवम्यां तु द्वाभ्यां तिस्रश्च विस्रुताः
कोसिकतमः पञ्चदश्या त्र विस्रुक् त्रयं ततः
विस्वः पश्यः पञ्चदश्यां वृच्चत्वारि द्वयोर्विस्रुक्
चतुर्दश्यस्तु द्रा ता स्याच्चत्वारि द्वौ च विस्रुतौ
आयुर्दात्रे पञ्चदशीं द्वयं वा पञ्चमी तथा
कोदात्कस्मै षोळशीं च वेळैकं चतुरो विस्रुक्
समिन्द्र णो विंशतिस्तु चतस्रस्त्रय एकता
धातारातिः षोळशीं च चतुरः सप्तमो विदत्
सुगावः सप्तदशो वा त्रयाणां षट्सु विस्रुताः
यां आवह द्वाविंशस्तु त्रयः पञ्च तृतीयकम्
वयँ द्वित्वा विंशतिस्तु द्वयोर्द्वौ त्रिभिरत्र ते
यज्ञ यज्ञं सप्तदशश्चतुरस्तु चतस्रकः

उरूँ हि राजा द्वाविंशा षड्वावृत् षट् च विस्रुताः
अग्नेरनीकं विंशत्या त्रिभिर्वा द्वयमेकता
नव दशः समुद्रे ते पञ्च चत्वार एव च
देवीरापस्त्रयो विंशस्तिस्रः सप्त च विस्रुताः
एजतु दशाष्टादशो वेळौ द्वौ पञ्चमो विस्रुक्
यस्यास्ते पञ्चदश च विसर्गाः पञ्चमो भवत्
पुरुदस्मः षोळशीं च सप्तभिः षट्सु विस्रुषु
मरुतो यस्य दशभिर्द्वाभ्यां षड्भिर्भनं भवेत्
मही द्यौरेकादशसु तथैकं चतुरो ब्रुवन्
त्रयो विंशतिराजिघ्र चैको वृत्पञ्चमो विस्रुक्
हव्येकाम्येऽष्टादश भिर्वेष्टनौ च द्वयोरथ
इह रतीर्विंशती च द्वाभ्यां पञ्च द्वयोस्ततः
त्रयो दशागन्मत्योविर्विस्रुक् पञ्चैकनान्तकम्
युवन्तं नवविंशत्या त्रयः पञ्चम एकता
परमेष्ठी त्रयोदश्यां सप्त चत्वारि विस्रुताः
दश चेन्द्र श्च मरुतः तत्रैकं वृच्च सप्तभिः
विष्णुः शिपिभिः ---- षड्भिर्दशविस्रुताः
दमोग्निराराग्नीध्रेस्या तिरश्च पञ्चमरिताः
विष्णुराप्री नैकादश्यां त्रिभ्यश्चैकादशीं विस्रुक्
शुक्रः क्षीरश्च्यैकादशश्चतरः सप्तविस्रुताः

सद्रो ह -----प्र सु सप्तसप्तदशो विस्रुक्
ययोरोजसाः पञ्चदश्यां षट्क चत्वारि चैकता
देवान् दिवं च द्वाविंशो विस्रुक् चत्वारि पञ्चनान्
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
नवमोऽध्यायः समाप्तः

अथ दशमोऽध्यायः
देवसवितश्चैकविंशो द्वाभ्यां वृदष्टविस्रुताः
ध्रुवसदं षोळश्यां तु पञ्चवृच्चतुरस्तथा
नवम्यामप्सु षदंत्वा तथाष्टाउ वेष्टनः क्रमात्
अपां रसं चतुर्दश्यां तिसृभिश्चत्रयः क्रमात्
गृहा ऊर्जा त्रयोदश्यां द्वाभ्यां चत्वारि विस्रुताः
संपृचस्थ सं द्वादश्यां द्वयं वृद्द्वयमेव तु
इन्द्र स्य वज्रोऽष्टाविंशस्त्रयश्चत्वारि चादधः
देवीरापश्चतुर्दश्या तिस्रः सप्तैकमेधते
अप्स्वन्तरे कादश तु त्रयश्च च त्रिषु क्रमात्
वातो वाषोळशीं तु चैकं षड्भिर्द्वयं ततः
वातरँ हाष्टादशभिश्चतस्रः पञ्चचैकमैत्
जवो यस्त्रयो विंशत्या चत्वारि सप्तभिस्त्रयः

वाजिनो वाजजितो ष्टावेकं चत्वारि विस्रुताः
देवसवि चतुर्दश्यां तिस्रो वृत्रय ईरिताः
न वा बृहस्पते वाजमिन्द्र वाजं नवा पुनः
एषावस्सा षोळशीं तु वृच्चैकं द्वयमुच्यते
देवस्य ववन्नवभिर्द्वौ वृत्तत्र चतुष्टयम्
नवभिर्वाजिनो वाजं विसर्गाश्चतुरो भवन्
एषस्यसप्तदशी स्यात् चत्वारि च चतस्रुकः
उतस्मास्य नवदशी स्त्रिभिश्च सप्तभिर्यथा
शंनो भवन्तु षोळश्यां त्रयः षट्कैकमिन्धते
तेनो अर्वन् सप्तदशः पञ्च सप्त च जभ्रिरे
वाजे वाजे व षोळश्यां चत्वारि नवभिः पुनः
आमावाजस्य विंशत्या पञ्चवृच्च पुनर्द्वयोः
वाजिनो वाजिं नवति सृभिः पञ्चमीविस्रुक्
आपये स्वाहाष्टादशषड्भिर्वृदेकमिष्यते
आयुर्यज्ञेन दशभिर्विसर्गाश्चतुरस्तथा
जाय एहि त्रयो दश्यां तिसृभिः षड् तथा भवन्
अस्मे वो अस्तु द्वादश्यां तिस्रश्चैव त्रयस्तथा
नमो मात्रे षोळशी च चतुर्भिश्च विसर्जनैः
सप्तदशवाजस्येमं पञ्चम्यां पञ्चमो भवत्
वाजस्येदं नवदशो द्वयोर्वा त्रिभिरेकता

वाजस्येमां नवदशश्चतुरस्त्रय एककम्
सप्तदश्याग्ने अच्छास्यात्रयो वृत् पञ्चमीविस्रुक्
सोमँ राजानमवसे चैकादश्यां वृदेककम्
प्रभो यच्चत्वरि यमा त्रयोदश्यां विस्रुग्द्वयोः
अर्यमणं बृहस्पतिं पदाश्चैकादशी क्रमात्
सरस्वत्यै वा षोळश्यां द्वयं च द्वयमेकता
अग्निरेकाक्षषट्त्रिंशत्षट्सप्ताष्टभिरेव च
षट्त्रिशत्पूषापञ्चास्याच्चत्वारि द्वयमष्टभिः
मित्रो नवश्चतुस्त्रिंशत्सप्तचत्वारि चैककम्
वसवस्त्रयोदशाक्षपञ्चचत्वारिंशत्यदा
वेष्टना दशमश्चैवं विस्रुक्सप्तत्रयं क्रमात्
इति श्रीशङ्कराचार्य कृतौ वाजसनेयसंहितायां पदकारिका रत्नमालायां
दशमोऽध्यायः समाप्तः

अथ एकादशोऽध्यायः
चतुर्विंशतिरेष ते त्रयोदश्यां सप्तदशः
ये देवा न्याष्टादशीमेकादश्यां पञ्चदशः
अग्ने सहस्व द्वादश्यां त्रयः षट्चैकमिष्यते
उपाँ शोरेकविंशत्या चैकं वृच्च तस्रकम्

अपो देवाश्च षोळश्यां द्वौ वृन्नव तृतीयकम्
वृष्ण ऊर्मिषोळशीं तु त्रयः सप्तसमीहिताः
अर्थे तस्थ चतुर्विंशो नवचाष्टादशो विस्रुक्
संमधुमतीः षोळश्यां द्वाभ्यां वृच्चैकपञ्चभिः
सनितात्वा त्राष्टादश्यास्त्रिभ्यः सप्तभ्य एव च
इमं देवा षोळशीं च द्वौ विसर्गौ ततः परम्
दाषवः कुरवो द्वादश्यां विस्पर्गाः सप्तमो भवन्
सोमस्य त्विषिर्दशभिरेकं विसर्गमिन्द्र तु
इन्द्रा याँ शाय षोळश्यां प्रयः पञ्चसु विस्रुताः
सधमादः पञ्चदशीं चत्वारि दशभिस्ततः
क्षत्रस्योल्बं षोडशीं तु तथैकं वृद्द्वयं ततः
रुजाद्रुबाक्षुषादश चैकं प्रवृद्विस्रुगेककम्
आविर्मर्याष्टादश श्चैकादशीं तथा नव
अवेष्टादन्यषोळश्यां त्रयो वृत्पञ्चविस्रुताः
दक्षिणा चतुर्दश्यां द्वितीयं च चतुरस्तथा
चतुर्दशप्रतीच्यीं च वृच्चैकं चतुरो विस्रुक्
उदीचीं च चतुर्दश्यामेकं वृत्त्रितयं ततः
सप्तदश्यूर्ध्वामारोहपञ्चमी चतुरस्तथा
सोमस्य त्वि त्रयादश्यामेकं च पञ्चमो भवन्
त्रयो विंशतिर्हिरण्यरूपा द्वौ वृच्च षष्ठके

सोमस्य त्वाविंशतिश्च द्वयोर्द्वौ चैकमेवच
प्रपर्वस्त्रयोविंशस्त्रयः सप्तैकमेव च
प्रजापते न विंशत्या द्वयमत्र च पञ्चभिः
रुद्र यत्ते क्रमी परं द्वादश्यामेकवेष्टनम्
इन्द्र स्य वज्रैकविंशस्त्रिभिः पञ्चभिरेव च
मात इन्द्र ते विंशत्या द्वयोश्चैकद्वितीयकम्
सप्तदश्याग्ने गृहपतये द्वौ द्वयं ततः
हंसश्शुचिरष्टादमो द्वादशी सप्तविस्रुताः
चतुर्विंशतियदसि त्रयश्चत्वार एव च
स्योना सी च चतुर्दश्यां द्वाभ्यां चैवैकमन्यथा
निषसाद घृताष्टौतिस्रस्त्रिभ्यश्च वेदसे
अभिभूरसि द्वादशी मेकं त्रिश्चैकमाहरेत्
सवितासि च नवम्यां तिस्रः सप्तचविस्रुताः
प्रियं करेति नवग्निस्तिस्रश्चैव त्रयस्तथा
अग्निः पृथुर्नवदशश्चत्वारि द्वादशाभवत्
दशसवित्राप्रसविर्द्वाभ्यां वृद्व्वयमत्र तु
बृहस्पतिना ब्रह्मणा पञ्चदशापदाभवन्
अश्विभ्यां पञ्चदशभिस्तथा वृच्च पञ्चमी
कुविदङ्गस्त्रयोदशात्सप्तवृच्चतुरो विस्रुक्
युवँ सुरामं द्वादश्यां त्रिवृदेकं च विस्रुतम्

पुत्रमिवसप्तदश्यां द्वाभ्यां पञ्चैकमाहरेत्
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नावश्यां
एकादशोऽध्यायः समाप्तः

अथ द्वादशोऽध्यायः
त्रयोदश्यां युञ्जानश्चैकं वृच्च षळत्र तु
युक्तेन मन्साष्टौ च चैकवृच्चं द्वितीयकम्
युक्त्वायेति चतुर्दश्यां चतुरोविस्रुतो द्विनान्
युजेवां नव दशाभिर्द्वौ वृच्च षट्कमेव च
यस्य प्रियानवदशस्त्रिभ्यश्च षड्भिरित्यपि
देवसवितर्विंशति त्रिभिरेवाष्टभिस्ततः
आददे गापञ्चदशीं द्वयोर्वृच्चैकमिष्यते
अभ्रिरसि चतुर्दश्यामत्रैकं वेळमेककम्
हस्त आधाय षोळश्यां त्रिभिरस्तु त्रिभिः पुनः
प्र तुष्टमष्टादशभिः द्वाभ्यां द्वितीयमेककम्
युञ्जार्थारासभं नवद्वौ वृदेकं च नान्तकम्
योगे योगे तवः सप्ततिस्रोवृच्च द्वयोस्ततः
प्रतूर्वदेहिविंशत्या षट् चतुर्भिस्त्रयः क्रमात्
पृथिव्या स्सधस्था द्वशचैकं तु तिसृभिर्यथा

अन्वग्निरष्टादश वा त्रयश्च त्रिषु चैककम्
आगात्य वा त्रयोदश्यां द्वयोः कुर्याद्द्वितीयकम्
आक्रम्य पञ्चदश्यां तु तथैकं त्रयमेकनान्
द्यौस्ते पृष्ठं पञ्चदशीं द्वाभ्यां चतुर्भिरेव च
उत्क्राम महषोळश्यां चत्वारि पञ्चचैकता
उदक्रमीन्नवदशं षड्भिर्वा षदकमागमन्
आत्वाजिघार्भि षोडश्यामेकं वेळमथैकता
आविश्वतः पञ्चदशीं त्रिभिः पञ्चभिरित्यपि
परिवाजपतिर्तव चैकं वेळं तृतीयकम्
परि त्वाग्ने पुरुवयं द्वादश्यां त्रिषु वेष्टसु
त्वमग्ने द्युत्रयोदश्यां त्रयः सप्त च विस्रुताः
द्वाविंशतिपृथिव्याः सधस्था श्चत्वारि चतसृभिः
अपां पृष्ठं सप्तदशीं विस्रुक् पञ्चैकनान्तकम्
पञ्चदशः शर्म च स्थश्चत्वारो द्वयमाहरेत्
संवसाथामेकविंशस्त्रिभिः षड्भिः समीधिधे
दशत्वामग्ने पुष्कराद्विसर्गास्तु त्रयो विदन्
तमुत्वा दध्यं दशभिस्त्रिभिश्च त्रय ऊचतु
तमु त्वपा भ्यो दशसु च त्वाय्येकं तु चैककम्
सीदहोदर्नवदश चत्वारि चतुरुषुद्वयोः
निहोता च त्रयोदश्यां षट्कमष्टौ तथैककम्

सँ सीदस्वचतुर्दश्यां द्वयोश्चैकं तथैककम्
अपो देवीस्त्रयोदश्यां चत्वारि षड्भिरादनम्
संते वायुरष्टादशश्चैको वा त्रिभिरुहतुः
सुजातस्तु चतुर्दश्यां चत्वारि चत्रिभिस्ततः
उदुतिष्ठ सप्तदशश्चतुर्णां तु त्रयो भवन्
ऊर्ध्व ऊषुण षोळश्यां चतुरः षदकमेव च
स जातो गानवदशो द्वयोर्दशभिरेककम्
स्थिरो भवत्रयोदश्यां त्रयस्सप्तणिरेकता
चतुर्दशश्शिवो भवद्वयोः पञ्चसु चैकता
प्रैतु वाजी चतुर्दश्यां द्वौ विसर्गौ तथैकनान्
नवदशो वृषाग्निं तु विसर्गेकं तु चैक न
ओषधयो नवदशश्चतस्रः सप्तभिर्द्वयोः
त्रयोदश्योषधयः वृत्त्रयः षट्कं तु चोर्नुते
विपाजसा च षोळश्या त्रिभिश्च सप्तभिः पुनः
आपोहिष्टैकादश्यां तु चैकं वृत्पञ्चभिः पुनः
दशयोवश्शिवतमस्ततोद्वयं च सप्तसु
तस्मात्परमेकादश्यां त्रिषु विस्रुषु भवेत्तथा
मित्रस्सँ सृचतुर्दश्या चतुर्नां वृद्द्विस्रुवद्वयोः
चतुर्दशो रुद्रा ःः! सँ सृज्यैकौ वृत्पञ्चसु क्रमात्
सँ सृष्टां तसुद्वादश्यां द्वयं चैक त्रिभिस्तु वै

द्वादशी च सिनीवाली त्रिभिरत्रैकमुच्यते
उखां कृणो सप्तदशीं द्वयं चैवैकमुच्चते
सप्तचत्वारिंशन्मखस्य पञ्चवृद्धशचैकनान्
कृत्वा यां त्रयोदश्या मेकं द्वाभ्यां तु चैकन्
वसवस्त्वा त्रयो विंशो द्वयोरत्राष्टभिः पुनः
अदितिष्टा तु नवभिर्द्वाभ्यामेव पुनर्द्वयोः
देवानां त्वा नवदशस्तिसृभिर्नवभिः पुनः
मित्रस्य चर्षणी सप्तवयं तिसृभिरेव च
देवस्त्वा सविषोळश्यां त्रिभिः षड्भिर्यथाक्रमम्
उक्याय बृद्द्वा विंशश्चैकमेकं प्रशस्यते
आकूतिं सप्तदश्यां च षड्भिर्द्वौ वा द्र वस्यते
मासुभित्था चतुर्दश्यां चतस्रस्तु विसर्जनाः
दृँ हस्वदेवि विंशत्या विस्रुगेकं तथैकनान्
द्र् वन्न स्सर्पिरष्टौ च द्वाभ्यामष्टभ्य एव च
परस्या अधि द्वादश्यां चैकं द्वौ वाद्वयं भवेत्
द्वादशः परमस्याश्च तिसृभिः षड्भिरेव च
यदग्ने कानि कानि च सप्तदशपदास्ततः
यदत्युप चतुर्दश्यां द्वयं वृच्चैकमिष्यते
अहरहस्सप्तदशश्चत्वारि षट्तथाविस्रुक्
नाभापृथि पञ्चदशी चतस्रस्तु द्वयं ततः

यास्ये नास्सप्तदश्यां द्वयोः सप्तभ्य एककम्
दँ ष्ट्राभ्यां मलिं द्वादश्यां तिसृभिर्द्वौ च पञ्चकम्
ये जनेषु त्रयोदश्यामेकं पञ्चभिरेकनान्
यो अस्मभ्यं सप्तदशीं तथैकं पञ्चचैककम्
संशितं मे त्रयोदश्या चत्वारि द्वयमाप्नुयात्
उदेषां पञ्चदश्यां तु द्वयमेनं तथैककम्
अन्नपतेस्तु षोळश्यां पञ्चभिः पञ्चमो विस्नुक्
पुनस्त्वादित्या विंशत्या ततो द्वाभ्यां नवक्रमात्
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
द्वादशोऽध्यायस्समाप्तः

अथ त्रयोदशोऽध्यायः
दशानो रुक्मष्टादशस्त्रिभिरेकादशस्तथा
नक्तोषा साषोळशीं तु षड्भिः पञ्चैकमेन तु
विश्वारूपाणि विंशत्या त्रयश्चत्वारि विस्नुताः
सुपर्णोसीति दशभिस्त्रयस्त्रिभ्यश्च चैकनान्
स्तोम आत्मा चतुर्दश्यां द्वाभ्यां चत्वारि विस्नुताः
सुपर्णो सीति षट्त्रिंशदष्टौ वृन्नवचैकता
अक्रन्ददग्निर्विंशत्या चत्वारि सप्तभिर्द्वयोः

चतुर्दश्याग्ने भ्यावर्तिन्द्वौ वृदेकं च नान्तकम्
द्वाविंशत्याग्ने अङ्गिरस्ततो द्वौ वृच्च सप्तभिः
पुनरूर्जा दशभ्यस्तु तत्रैकं विस्रुतैककम्
सप्तदश्यात्वाहारिषं तु चैकं वृत् षट्कमत्र तु
उदुत्तमोष्टादशभिर्द्वाभ्यां चात्रैकमुच्यते
अग्ने बृहन्नवदशो द्वौ वृत्सप्त द्वयोस्ततः
सीदत्वं चैक विंशत्या नतो द्वौ पञ्चचैकता
अन्तरग्ने चतुर्दश्यामेकं पञ्च तथैकता
शिवो भूत्वा सप्तदश्यामेकं षड्भिर्यथाक्रमम्
दिवस्परि सप्तदश्यां चत्वारि षड्भिरत्र तु
विद्मातेषैकत्रिंशत्या तिसृष्वेकं प्रयुज्यते
अष्टादशः समुद्रे त्वा पञ्चपञ्चद्वयं ततः
श्रीणामुदारस्सप्तदश्या चतस्रस्तु तथाष्टामीम्
विश्वस्य केत्वष्टादशो द्वयोश्चतुर्भिरेकता
उशिक्पावको ष्टादशश्चैकं वृत्पञ्चमैकता
यस्ते अद्यनवदश चतस्रस्तु तथाद्वयम्
आतंभजनवदशो द्वाभ्यां त्रिभ्यः पराभवन्
त्वामग्ने यजाष्टादशश्चैकं चतुभिरेकता
अस्ताव्यग्निः पञ्चदशीं सप्तभ्यः षड्भ्य एव च
उदुत्वा पञ्चदश्यां तु चत्वारि सप्तभिः पुनः

प्रेदग्ने पञ्चदश्यां तु चत्वारि षड्द्वयं ततः
द्वाविंशतिप्रप्रायेति वेळमेकमथाष्टामीम्
आपो देवीश्च विंशत्या चत्वारि चतुरस्तथा
अप्स्वग्ने द्वादशीश्चैव द्वाभ्यां चतस्र इत्यपि
गर्भो असीति द्वादश्यां चत्वारिश्चैव विस्रुताः
प्रसद्येति चतुर्दश्यां त्रयश्चत्वारि एकता
पुनरासच्चतुर्दश्या वृत्रयः पञ्चविस्रुताः
बोधामेष्टादशश्चैव द्वाभ्यां पञ्चभ्य एव च
सबोधिसूरिर्नवभिस्त्रिभिर्द्वावेकमिष्यते
चतुर्विंशापेत वीतचैकं षष्टैकमुच्यते
संज्ञानमस्याष्टादश पञ्चभिः पञ्चसु क्रमात्
अयँ सो अग्निर्नव दशो द्वाभ्यां पञ्चत्रिभिस्ततः
अग्नेयत्ते दिविंशति त्रयः षष्ठी तथा भवेत्
नवदशोग्ने दिवोर्न तथैकं पञ्चचैकता
पुरीष्यासोग्नयोदश द्वयोर्वृदष्टविस्रुताः
इळामग्ने नवदशः पञ्चम्यां पञ्चमीतथा
चिदसि चतुर्दश्यामेकं चैव तुवेष्टनम्
चतुर्दशौ लोकंपृण त्रिभिरेकं तथा द्वयोः
ता अस्येति त्रयोदश्यामेकं पञ्चैकमिष्यते
इन्द्रा विश्वा दशभ्यस्तु चत्वारि द्वयमेकता

समितं समेकादश्यां चत्वारि चैकवेष्टनाः
सं वो मनांसि विंशत्या तत्र द्वयद्वयोरथा
पञ्चदश्याग्नेत्वं परीद्वयोश्चपञ्चमीद्वयम्
मातेवपुत्राष्टादशः पञ्चवृत्षड्भिरेव च
असुन्वन्तं नवदशश्चैकं वृद्द्वयमेव च
नमस्सुते नवदशश्चत्वारि त्रितयं ततः
यस्यास्ते घोरे विंशत्या त्रिभिः पञ्चैकमेव च
यन्ते देवी पञ्चविंशश्चत्वारि पञ्चमो भवन्
निवेशनः षोळशीं तु पञ्चवृच्चैव पञ्चभिः
सीरायुञ्जन्तिदशभिरेकं वृद्द्वौ विसर्जनौ
युनक्तसीराद्वाविंशस्ततश्चैकं तु पञ्चभिः
शुनं नः फलाष्टादशो द्वयोर्वृत्पञ्चमीं पुनः
घृतेन सीताष्टादशो द्वयोर्वृत्त्रितयैकता
लाङ्गलं च चतुर्दश्यां पञ्चभिर्वेष्टनैर्युतम्
कामं कामदुघैकादश्यां त्रिभिर्द्वयोर्वृस्रुक्
विमुच्यध्वं च दशभिश्चैकं चत्वारि विस्रुताः
चतुर्दश सजूरब्द चतुरो दशभिस्तु वै
या ओषधीः पञ्चदशश्चैकं पञ्चभिरेव च
शतं वा पञ्चदश्यां तु तत्रैकं चतुरो भवन्
ओषधीः प्रतिनवभिश्चत्वारि सप्तभिः पुनः

पञ्च दशौषधीरितिश्चैकं वृत्पञ्चमो विस्रुक्
अश्वत्थेव चतुर्दश्यां त्रिभिश्चतुर्भिरेव च
या ओषधीश्चैकादश्यां चत्वारि षड्भिरत्र तु
दशाश्वावतीं सोम वा चत्वारि द्वयमिष्यते
उच्छुनि ओषैकादश्यां द्वाभ्यां द्वयमथोत्तरे
पञ्चदशोष्कृतिर्नाम द्वयोः पञ्चसु विस्रुषु
अतिविश्वाश्चतुर्दश्यां द्वयोरष्टभिरत्र तु
त्रयो दशीं यदि माश्च द्वौ त्रयश्चैकमेव च
एकाद यस्यौषधीश्चत्वारि षष्ठके तथा
साकं यक्ष्म प्रपतेति द्वादश्यामेकवेष्टनम्
अन्या वो अन्यां षोळशीं चैकं षड्भिर्विस्रुक् तथा
याः फलिनीर्याद्वादशश्चैकं वृद्धशविस्रुताः
मुञ्चन्तु माचैकादश्यां वेष्टनाश्च त्रयोऽभवन्
त्रयोदश्यवयतीस्सद्वयोरत्रैव पञ्चभिः
या ओषधी स्त्रयोदश्यां त्रिभ्यः पञ्चभ्य एव च
विष्ठिताः पृथिवीमष्टौ द्वयोर्धृच्च द्वयं ततः
याश्चेदं तु पञ्चदशस्त्रयः पञ्चसु विस्रुषु
नाशयित्रीचैकादश्यां त्रिभिर्वृच्च द्वयोर्विस्रुक्
मानोरिषत्पञ्चदशीं वेष्टनौ द्वौ त्रिभिर्विस्रुक्
ओषधयः सन्द्वादश्यां विस्रुग्वौ नान्तमेककम्

त्वां गन्धर्वा चतुर्दश्यां विस्रुक् चत्वारि द्वौ चनान्
चतुर्दशस्त्वमुत्तमा द्वयोः पञ्चसु चैककम्
द्वाविंशतिं मा मा हिंसी देकं सप्तभिरेव च
अभ्यावर्तस्व द्वादश्यां विसर्गास्तु द्वयं ततः
अग्ने यत्ते चैकादश्यां चैकविस्रुगुवेद्यदि
इषमूर्जं नवदशश्चैकं विसर्गमुच्यते
अग्ने तवपञ्च -- द्वाभ्यां त्रिभिश्च विस्रुक्
पावकावश्चतुर्दश्यां षष्ठे चत्वारि चैककम्
चतुर्दश्यूर्जेनपाच्च सप्तभ्यो दश विस्रुताः
इरज्यन् पञ्चदश्यां तु द्वौ वृच्चत्वार एककम्
निष्कर्तारं चतुर्दश्यां द्वयं चैव द्वयं पुनः
ऋतावानं पञ्चदशीं चत्वारि त्रितयं ततः
आप्यायस्व चैकादश्यामेकं वृदेकमत्र तु
सन्तेपयां सप्तदशं चतुरस्त्रयर्दशिताः
एकादशाप्यायस्वं त्रिभिः पञ्चैकनान्तकम्
आतेवत्सश्चैकादश्यां द्वयं द्वितयमेव च
तुभ्यन्तां गिरो नवद्वयोश्चत्वारि विस्रुताः
अग्निः प्रयेषु दशसु द्वाभ्यां त्रिभ्यश्च विस्रुताः
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां

त्रयोदशोऽध्यायः

अथ चतुर्दशोऽध्यायः

मयि गृह्णामि द्वादश्यां त्रयोवृत्तिर्विसर्जनाः
ब्रह्मजज्ञैकविंशत्या पञ्चम्येकादशस्तथा
हिरण्यगानवदशश्चैकं पञ्चभिरित्यपि
द्र प्सश्च स्कन्दैकविंशश्चैकं चैव चतस्रुकः
नमोऽस्तु पञ्चदशभिर्विसर्वाः पञ्चमस्तथा
या इषवश्चतुर्दश्यामेकोवा पञ्चचैककम्
एवामीरोचषोळश्यां त्रयं पञ्चैव विस्रुताः
कृणुष्वपाजोऽष्टादश श्चत्वारि चतुरैकता
तवभूमा स सप्तदशीं द्वाभ्यां चत्वारि चैककम्
प्रतिस्पशो द्वाविंशत्या द्वयोर्वृद्द्वादशी विस्रुक्
उदग्ने तिष्ठौकविंशो वेळौ द्वौ द्वयमेकता
ऊर्ध्वो भवा नवदशश्चैकं वृद्द्वयमेकता
अग्नेष्ट्वातेजसा सादयाम्यष्टौ विस्रुगेककम्
भुवोयज्ञःसप्तदशस्त्रिभिः पञ्च विसर्जनाः
ध्रुवासिपञ्चदश्यां तु त्रिभिश्चैव द्वयोर्विस्रुक्
प्रजापतिष्ट्वा द्वादश्या मेकमेकं तथैककम्
भूर्भूमिस्तु चतुर्दश्यामेकं वृत्पञ्चसु क्रमात्

विश्वस्मै प्राणविंशत्या पञ्चवृच्चैकमिष्यते
काण्डात्काण्डा द्द्वादशी च त्रयश्चैव त्रयं क्रमात्
द्वादश्यां या शतेना द्वयोरेकं तु चैक हि
यास्ते अग्ने सूर्य्ये षोळश्यां द्वयोस्सप्तसुविस्रुषु
षोळशो या देवाश्च वृदेकं तु भवा विस्रुक्
विराड्योतिर्द्वादशीं तु त्रिभिश्चत्वारि विस्रुताः
विश्वस्मै पञ्चदशभिस्त्रयाणां त्रयमत्र तु
मधुश्च सप्तत्रिंशच्च वृद्द्वादशत्रयोदशीम्
अष्टाळ्हासि द्वादशीञ्च द्वयं च द्वितयं तथा
सह स्वेमाश्चैकादश्यां द्वयोस्तिसृभिरित्यपि
मधुवाताश्च दशसु तथैकं पञ्चमो भवन्
द्वादशीं मधुनक्तं तु तथैकं चतुरो भवन्
अपाङ्गं भं नवदशस्त्रिभ्यः सप्तभ्य एककम्
त्रीन् समुद्रा नष्टादश त्रयः पञ्च त्रयस्तथा
ध्रुवासिचं नवदशः पञ्चषट्कमथैककम्
इषे राये षोळशीं तु वेष्टनौ द्वौ तथापि च
अग्ने युक्ष्वा ह्येकादश्यां द्वयोर्विसर्गयोरथ
युक्ष्वाहि देवदशसु द्वाभ्यां त्रिभ्यस्तथा द्वयोः
सम्यक्स्रवः सप्तदश्यां तथाष्टौ च विस्रुताः
ऋचे त्वा रुचेत्वाभासे चतुर्दश्येकविस्रुतम्

अग्निर्ज्योतिषा दशभिश्चैकवृत्तिर्द्वयोस्ततः
सप्तदश्यादित्यं गर्भं त्रसो वृच्च द्वयं ततः
वातस्य जूसप्तदश्यां द्वयं चैकं तु चैककम्
सप्तदश्याजस्रमिन्दुं पञ्चानां पञ्चसुक्रमात्
वरूत्रीं त्वा सप्तदशीमेकं वृत्रिभिरेककम्
यो अग्निरग्नेकविंशत्या द्वाभ्यां सप्त च विस्रुताः
अष्टाविंशतिरिमं मा हिंसीर्द्वयं च पञ्चसु
एकशफं दशैकं वृत्साहस्रैकादशी द्विवृत्
वरुणस्येति द्वादश्यां तिसृषु द्वयम्
अजो ह्यग्नेकविंशत्या विस्रुक् पञ्चद्वयं च नान्
त्वं यविष्ठैकादःश्यां तु द्वौ विसर्गावथैकनान्
षड्विंशतिरपां त्वेमान् त्रिर्विन्नान्तास्त्रयस्तथा
दशायँ पुरोभुवोवै द्वयं च षड्भिरेव च
गायत्र्! यै गा पञ्चदशीं सप्तमं षड्भिरत्र तु
अयं दक्षिणादशभिस्त्रयो वृतित्रयं ततः
त्रिष्टुभः पञ्चदशसु चाष्ठभिर्नवभिः पुनः
अयं पश्चाद्दशसु चेद्वयं तु चतुरो भवन्
जगत्या पञ्च दशस्यात्सप्तवृत्सप्तविस्रुताः
दशेदमुत्तराच्चैवं द्वयोर्वृच्चैकमेव च
पञ्चदशोऽनुष्टुभश्च पञ्चवृत्षदकमेव ते

दशेयमुपरिमिति विस्रुक् चत्वार एव च
पङ्क्त्यैः -- निधन्नैकविंशश्चाष्टौ वृत् षट्च विस्रुताः
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
चतुर्दशोऽध्यायः

अथ पञ्चदशोऽध्यायः
अष्टादशध्रुवक्षितिश्चत्वारि द्वयमेव च
कुलायिनी षोळश्यां तु द्वयोरत्र चतुर्थके
स्वैर्दक्षैरष्टादशभिश्चत्वारि वृद्द्वयोर्विस्रुक्
पृथिव्याः पुरी विंशत्या चतुरस्त्रिश्च विस्रुताः
अदित्यास्त्वेकविंशत्या स्त्रयः षड्भिस्तु विस्रुताः
सजूत्र तु चतुर्दश्यां पञ्चभिर्द्वादशस्तथा
प्राणं मे त्रयोदश च द्वयं चैकं च वेदसे
अपः पिन्वद्द्वादशीं तु द्वयं चत्वारि विस्रुताः
मूर्धा वयस्तु दशभिश्चतुरः पञ्चमो विस्रुक्
बस्तो विवलमष्टौ च द्वयं तु चतुरस्तथा
सिँ हदिः पष्ट वाष्टौ वेळौ वा चतस्रकः
अनड्वान् पठन्तिरष्टौ स्याच्चत्वारि च त्रयैकता
पञ्चाविर्गायत्रीस्सप्त चत्वारि त्रय ईरिताः

इन्द्रा ग्नी अव्यथमानामेकादशीं च वृद्द्वयोः
विश्वकर्मा त्वाषष्ठी स्यादेकं वृच्चैकविस्रुताः
राज्ञ्यसि प्राचेकविंश पञ्चवृच्चतुरो भवन्
आयुर्मे सप्तदश्यां तु द्वयोश्चत्वारि विस्रुताः
माच्छन्दः प्रमा सप्तभिर्द्वाभ्यां वृत्त्रय ईरिताः
बृहत्यनुष्टुप् षट्कं स्याद्वेष्टनास्तिस्र आदिधुः
पृथिव्यान्तरिक्षं षड्भिर्विसर्गाद्वौ तथैव च
मनः कृषिश्च सप्तभ्यः पञ्चम्यां तु विस्रुग्गवैत्
पञ्चदश्याग्निर्देवता विसर्गा द्वादशस्तथा
मूर्धासिराट् चैकादश्यां यन्त्रीरद्यं त्रैकादशीम्
आशुस्त्रिवृद्विंशतिस्तु त्रयोदश च विंशतिः
गर्भाः पञ्चसप्तदश्यां दशवृत्षोळशस्तथा
अग्नेर्भागोऽष्टादशस्तु चत्वारि वृत्तथाष्टमः
नृचक्षसां च विंशत्या पञ्चवृच्चचैकादशः
वसूनामष्टादशभिः पञ्चमो दश विस्रुताः
अदितेर्विंशतिश्चैवं चतुरो वृत्पञ्चदशीम्
यवानां त्रयोविंशत्या षट्कं वृद्द्वादशो विस्रुक्
एकयास्तु वत त्रिंशद्दशभिश्च त्रयोदश
नवभिरस्त्वष्टाविंशश्चाष्टौ चतुर्दशैकता
सप्तदश ह्येकत्रिंशद्दश चतुर्दश स्तथा

पञ्चविंशत्याषट् चत्वारिंशत्पञ्चदशैकवृत्
विसर्गाष्टादशश्चैव चत्वारि नाममत्र तु
इति श्रीशङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
पञ्चदशोऽध्यायः

अथ षोडशोऽध्यायः
अग्ने जातान्विंशतिस्तु पञ्चचत्वारिपञ्चकम्
सहसाजाताष्टाविंशपञ्चैकादश चतुरुषु
अग्नेःपुरीषं विंशत्या चत्वारि वृत्तयो विसृुक्
एवश्छन्दो वरिवोष्टौ त्रयो वृत्सप्तभिर्विसृुक्
सिन्धुस्समुद्र स्सप्तम्यामेकं चैव द्वयोर्विसृुक्
अक्षरपङ्क्तिर्नवमिः सप्तवृत्पञ्च विसृुताः
बृहद्र थन्तरं चाष्टौ पञ्चभ्यश्चतुरो विसृुक्
एवो वरिवैकादश्यां पञ्चश्वष्टौ च विसृुताः
रश्मिना सत्यायसत्यं त्रयोदशीं तर्योश्च विसृुक्
प्रतिधिनाद्वादशीं च त्रयो वृच्चैकमत्र तु
उशिजा वसु चतुर्दश्यां त्रयश्चत्वारि चाद्वयोः
त्रयोदश्यैळेनौषधी पञ्चवत्षट्कमुच्यते
दशभ्यः प्रतिपदसि षट्सुवृच्चैकविसृुगम्

त्रिवृत्त्रिवृते षभ्यां तु वेष्टनाष्टौ यथाक्रमम्
आक्रमःषोळशीं चैवं दशवृत्पञ्चविस्नुताः
राज्ञ्यसि प्राच्यैकादश्यां द्वयोश्च चतुरो भवन्
त्रिवृत्वा त्त्र त्रयोदश्या वृत् त्रिभिश्चैकविस्नुतम्
ऋषयस्त्वा चतुर्विंशः पञ्चवृत् षट् च विस्नुताः
विराळस्यैकादश्यां तु त्रयश्चत्वार एव च
पञ्चदशस्त्वा त्रयोदश्या त्र द्वौ वृद्द्वयविस्नुक्
सम्राळेकादशीं कुर्यात् त्रयोवृच्चतुरस्तथा
सप्तदशस्त्वा स्तोमस्तु त्रयोदशीं द्वयं द्वयोः
एकादश्यां स्वराळसि त्रिभिश्चत्वारिविस्नुताः
त्रयो दश्येकविंशस्त्वा त्रयाणां वृत्रिभिस्ततः
अधिपत्न्ये स्येकादश्यां त्रिषु वृच्च त्रिभिः क्रमात्
त्रिणवत्रयस्त्रिंशौ त्वा त्रयोदश्यां तु षट्सुवृत्
अयं परश्चैकविंशत्याष्टौ वृच्च त्वैकादशः
तेभ्यो नमो विंश स्तु विसर्गाश्चाष्टमस्ततः
त्रयोदश्यायं दक्षिणा षड्भिर्वृत्पञ्चविस्नुताः
अयं पश्चात्त्रयोदश्यां षण्णा वृत्सप्तविस्नुताः
त्रयोदश्यायमुत्तरा त्रिषु विस्नुताः
त्रयोदश्यायमुपरि सप्तपञ्चैकनान्तकम्
अयमग्निस्तु नवभिर्विसर्गाः पञ्चमो विदुः

अबोध्यग्निः सप्तदश्यां षड्भिर्वृच्चतुरो विस्रुक्
पञ्चदश्यवोचामेति द्वौ वा द्वाभ्यां च विस्रुतः
जनस्यगोपाः षोळश्यां चत्वारि सप्तविस्रुताः
त्वामग्नेर्नवदशश्चैकं सप्तैक नान्तकम्
सखायस्सन्त्रयोदश्या त्रिभिश्चैव विसर्जनैः
सँ समिद्यु सप्तदश्यामेकेन चतुरकस्तथा
त्रयोदशीं तु त्वामग्ने हविष्मन्तैकवृत्रिभिः
त्वां चित्रश्नवोदशभिस्त्रयाणां त्रिषु विस्रुताः
एनावोग्निं पञ्चदशीं चैकं वृद्व्वयमुच्यते
विश्वमस्य द्रुतं त्रयोदशसु द्वयोस्तृतीयकम्
समुद्र वस्तु दशभिस्त्रयश्चत्वारि विस्रुताः
अग्ने वाजस्यैकादश्यां चतुर्णां पञ्चभिस्ततः
एकादश्यां सचि इधानः पुनरेकं तु षष्ठके
क्षपोराजन् त्रयोदश्यां चैकं पञ्च तथैककम्
भद्रो नो अग्निर्द्वादशीं तु त्रयोवृन्नवविस्रुताः
भद्रा उतप्रदशसु चतस्रश्चतुरो विस्रुक्
येना समत्सैकादश्यां त्रिषु वृच्च द्वयोरथ
नवदशाग्निं तं मन्ये वेष्टनैकाष्टमो विस्रुक्
सो अग्निरियो नवदशश्चत्वारि दशसु क्रमात्
सप्तदशोभे सुश्चन्द्र पञ्चवृत्पञ्चविस्रुताः

त्रयोदश्याग्ने तमद्यचैकं वृच्च द्वयोर्यदि
अधाह्यग्नेचैकादश्यां विसर्गास्तु चतस्रकः
एभिर्नोर्कैस्त्रयोदश्यां चैकं वृन्नवभिस्ततः
चतुर्विंशाग्निं होतारं पञ्चभ्यश्चतुपञ्चसु
ये एव ऋषयोनवदशो द्वयं षष्ठे द्विनान्तकम्
तं पत्नीभिर्नवदशो द्वयोर्वृत्सप्तविस्रुताः
सप्तदश्या वो चां त्रिभ्यश्च नवभिः पुनः
अयमग्निः पञ्चदशीं चत्वारस्तुषदैकता
संप्रच्यवपञ्चदशीं पञ्चदशोरथैककम्
विंशतिरुद्बुध्यस्वाग्ने त्रयो द्वाभ्यां द्वयं ततः
चतुर्दशीं एनवहस्येकं वृच्च द्वयोस्तथा
तपस्तपस्य षट्पदाश्चैकं वृच्चतुरो भवन्
द्वाविंशतिः प्रोथदश्वश्चैकं वृच्चतुरैककम्
आयोष्ट्वासदने विंशेत्येकं वृच्चद्वयं विस्रुक्
सहस्रस्यप्रमाष्टौ च त्रयो वृच्चैकमिष्यते
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
षोडशोऽध्यायः समाप्तः

श्रीः

अथ सप्तदशोऽध्यायः

नमस्ते रुद्र द्वादश्यां द्वौ वृच्च त्रिभिरित्यपि
याते रुद्र चतुर्दश्यां त्रयोवृच्च द्वयोर्विस्रुक्
यामिषु च चतुर्दश्यां द्वयं वृच्चैकमेव च
शिवेन वचसा त्वातु चतुर्दशिं द्वयं द्वयोः
अध्यवोचत्षोळशीयं तु द्वितीयं पञ्चभिस्त्रयः
नवदशासौ यस्ताम्रो द्वाभ्यां दश च विस्रुताः
असौ योवपञ्चदशीं च त्वय्याष्टौ तथा द्वयम्
नमोस्तु नीत्रयोदश्यां तिसृणां चतुरो भवन्
प्रमुञ्च्यथन्वषोळश्यामेकं घृत्सप्तमस्तथा
पिज्यं धनुस्त्रयोदश्यां चत्वारि सप्तभिर्द्वयम्
षोळशीपरिते धन्व द्वयं चतुरे एककम्
यातेहेतिपञ्चदशीं चैकं चतुर्भिरेकता
द्वादशावतत्य धनुः पञ्चभ्यस्तु चतस्रकः
नमस्त आयुर्द्वादश्यामेकं वृच्च द्वयोर्यदि
मानो महान् सप्तविंशं चैकं वृद्दश विस्रुताः
तोकेतनपञ्चदश्यामेकं वृच्चतुरेककम्
हिरण्यबाहवः षोळश्यां षण्णां वृच्चतुरस्तथा
बभ्लृशाय द्वादशीं तु वेष्टनौ द्वौ तथा सति
रोहितायेति द्वादश्यां त्रिषु द्वयमथापिवः

कृत्स्नावीताय द्वादशीं वेष्टनाः पञ्चकक्रमात्
वञ्चते तु त्रयोदश्यां सप्तभिस्तु चतस्रकः
उष्णीषिणे कादशं च सप्तनृत्सप्तमी विस्रुक्
विसृजद्यो विद्यदष्टौ षण्णां वृच्चाष्टामी विस्रुक्
सभाभ्यः सभापत्यष्टौ चतुर्णां चाष्टमो विस्रुक्
गणेश्यश्चाष्टमी यस्तु पञ्चभ्यश्चाष्टमी तु वा
सेनाभ्योऽष्टौ यदिश्यांतु पञ्चमी ह्वाष्टमो विस्रुक्
अक्षौ तक्षभ्य एवस्यात्पञ्चमीं पुनरष्टमीम्
श्वभ्यः श्वपतिरष्टभ्यः पञ्चवृद्द्वितयं ततः
कपर्दिनेऽष्टभिः कुर्यात्सप्तवृच्चैकविस्रुताः
ह्रस्वायाष्टौ वृदेकं स्यादाशवेष्टौ वृदेककम्
ज्येष्ठायाष्टौ त्रिवृत्स्यातां सोभ्याष्टद्वयं च वृत्
वन्नियाष्टचतुर्थं वृद्बिल्मिनेष्टौ द्वयं भवेत्
धृष्णवेष्टौ च वृत्पञ्च स्रुत्यायाष्टपदं भवेत्
कूप्याष्टवृद्द्वौ च स्यातां वात्याष्टभ्यो वृदेककम्
शङ्कवेष्टवृच्चतुरो वृक्षे नवषट् चत्रिषु
पार्य्यायाष्टौ द्वयं वृच्च सिकत्याष्टौ द्विवृद्भवेत्
व्रजज्याष्टवृत्रयश्चैव शुष्क्यायाष्टैकवेष्टनम्
पण्र्याय षोळशीं चैव दशवृन्नव विस्रुताः
द्रा पेन्धसो नवदशीं चत्वारि त्रिषु विस्रुषु

इमा रुद्रा याष्टादशस्त्रिषु वृत्तितयैकता
पञ्चदशीं याते रुद्रा विसर्गास्तु द्वयं ततः
परिणो ष्टादशैव स्याद्द्वयं वृत्षट्कमेव च
मीळ्हष्टमो ष्टादशस्तु चत्वारि पञ्च विस्रुताः
पञ्च दशीं विकिरिद त्रयाणां वृच्च पञ्चभिः
सहस्राणि चैकादश्यां वृद्द्वयोरत्र पञ्चभिः
एकादशीमसंख्याता वृद्द्वयोर्विस्रुगेकता
अस्मिन्महति षण्णां तु चैको विस्रुक् तथैकनान्
नीलग्रीवा पञ्चभिस्तु त्रिर्वृच्चत्वारिविस्रुताः
शर्वा अधस्त्रिरेकरं त्रिर्व्यक्षे चतुर्थी द्वौ वृत्त्रिः
भूतानां च चतुर्थ द्वौ त्रीन् पथां चत्वारि द्वौ चतुः
तीर्था चत्वाद्वौ द्वौ च चान्नेषु पञ्चमी तथा
वृदेळं विस्रुगैकं च नान्तमेकं तु शस्यते
एतावन्तश्चसप्तर्मां चैकं वृच्चतुरो विस्रुक्
नमोस्तुरुन्नवदशीं विसर्गैर्नवभिः क्रमात्
इति श्री शङ्कराचार्यकृतौ वाजसनेयसंहितायां
पदकारिकारत्नमालायां
सप्तदशोऽध्यायः समाप्तः

अथाष्टादशोऽध्यायः

नवविंशत्यश्मनूर्जं वृच्चत्वार्यष्टमो द्वयोः
इमामेग्ने त्रयोदश्यां चैकं वृत्त्रिभ्य एव च
पञ्चदशीमर्बुदं च द्वाभ्यां षड्भिस्तथैककम्
ऋतवस्थद्वादशी तु सप्तभिस्तु नवाविस्रुक्
समुद्र स्य त्वा दशभिर्द्वौ विसर्गौ प्रकीर्तितौ
हिमस्य त्वा जरा दश द्वयमत्र विस्रुग्भवेत्
त्रयो विंशतिरूपज्मन्नेकं द्वौ च तथैककम्
अपामिक्षं चतुर्दश्यां द्वयं वृत्त्रिभिरेकता
अग्ने पावकैकादश्यामेकं चनान्तमत्र तु
सनः पावक चतुर्दश्यामेकं वृत्पञ्चचैककम्
पावके यैकविंशत्या विस्रुक् पञ्चत्रयंश्चनान्
चतु□□□विंशतिर्नमस्ते पञ्चषट्कैकमेव तु
सप्तदश्यां तु ये देवाश्चैकं पञ्चभिरेकता
ये देवाश्चतुर्विंशत्या द्वयोः सप्तैकमुच्यते
चतुर्दशीं प्राणदाश्च पञ्चवृद्दशचैकता
अग्निस्तिग्मेनैकादश्यां विसर्गास्त्रय ईरिताः
य इमा नवदश्यां तु वृद्द्वयोः पञ्चमैकता
किं स्विदासीदष्टादशस्तु चतुर्नां द्वयमेककम्
पञ्चदशीं विश्वतश्चक्षुः षड्भिः दशचैकता
एकविंशे किँ स्विद्वनं पञ्चसप्तभिरेककम्

नवदशो या ते धामानि त्रिषु त्रिभिरेकनान्
चक्षुषः पिताष्टादशस्त्रयोवृत्त्रिषु विस्नुताः
विश्वकर्मा नवदश षष्ठे चत्वारि चैकना
योन पिता विंशतिस्तु त्रयो वृत्षष्ठमत्र तु
त आयञ्नवदर्शि द्वाभ्याञ्चैव द्वयैकना
परोदिवा विंशतिश्च तत्रैकं सप्त विस्नुगाः
तमिद्गर्भं नवदशीमेकं त्रिषु च चैककम्
नतं विदाथ सप्तदश्यां द्वाभ्यां चत्वारि विस्नुताः
विश्वकर्माण्यष्टादश्यां द्वयं चैव चतस्रकम्
आशुश्शिशानः षोळशीं त्रिभ्यश्चैकादशाविस्नुक्
संक्रन्दनो पञ्चदशीं पञ्चभिस्त्रितयं विस्नुक्
स इषु हस्तैः षोळश्यामष्टौ वृन्नवमो भवेत्
बृहस्पते जषोळश्यां चत्वारि चतुरुषु त्रयः
बलविज्ञाय षोळश्यां षण्णां वृदष्टमैकना
गोत्रभिदं तु षोळश्यां पञ्चमीं द्वयमेव च
षोळश्यामभिगोत्राणि त्रिषु वृन्नव विस्नुताः
इन्द्र आसां पञ्चदशीं द्वयोर्वृत् षट् चविस्नुताः
पञ्चदश्येन्द्द्र स्य वृष्णः ततो द्वाभ्यां चतस्रकः
सप्तदशीमुद्ध ऋषयः द्वयोश्चैकं द्वयोरथ
अष्टादशास्माकमिन्द्र स्त्रयः षण्णां तथैकना

